

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

जून् - २०१९ रू.५/-

१४-०६-२०१९
वज्रकवचसमर्पणम्

१५-०६-२०१९
मौक्तिककवचसमर्पणम्

तिरुमल
श्रीस्वामिनः ज्येष्ठाभिषेकः
१४-०६-२०१९
तः
१६-०६-२०१९
पर्यन्तम्

१६-०६-२०१९
स्वर्णकवचसमर्पणम्

श्री वराहस्वामिनः आलयः,
तिरुमल

तिरुमलतिरुपतिदेवस्थानम्

## २०१९ एप्रिल् २४ तः २७ पर्यन्तं तिरुमल श्रीवराहस्वामिनः आलये ति.ति.दे. द्वारा निर्वहित बालालय - अष्टबन्धन - महासम्प्रोक्षणदृश्याणि



ति.ति.दे. अर्चकबृन्देन साकं देवस्थानस्य उन्नताधिकारिणः



अष्टबन्धनतैलं नवनीतेन सह अवहननेन सिद्धीकरणदृश्यम्



ऋत्विजः वैदिककार्यक्रमाणां निर्वहणार्थम् आलयप्रवेशन दृश्यम्



तिरुमल पुरवीथिषु भ्रममाणः श्रीवराहस्वामी





श्रीवराहस्वामिनः गर्भालयशिखरस्य महासम्प्रोक्षणकार्यक्रमः

# गीतामृतम्



ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्।।

यः पुरुषः 'ॐ' इत्येकाक्षरं ब्रह्ममुच्चरन् एवं च अर्थस्वरूपं मां चिन्तनं कुर्वन् शरीरं त्यक्त्वा गच्छति, सः पुरुषः परमगतिं प्राप्नोति।

(भगवद्गीता ८/१३)

# सङ्कीर्तनम्



नमाम्यहं मानवसिंहं
प्रमदाङ्कमहोबलनरसिंहं ।।नमामि।।

दानवदैत्यविदारणसिंहं
नानायुधकरनरसिंहं
भूनभोंतरापूरितसिंहं
आननवह्निलयान्तकसिंहं ।।नमामि।।

प्रलयनृसिंहं बहुमुखसिंहं
सललितगरुडाचलसिंहं
कुलिशनखरमुखघोषितसिंहं
तिलकितबहुरविदीपितसिंहं ।।नमामि।।

शान्तनृसिंहं शौर्यनृसिंहं
सन्ततकरुणाजयसिंहं
कान्तश्रीवेङ्कटगिरिसिंहं
चिंतितघनसंसिद्धिनृसिंहं ।।नमामि।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

'नमाम्यह' मिति शिखापदे अहोबिलनरसिंहः कीर्तितः। 'दानवदैत्य' इत्यादि प्रथमचरणे राक्षससंहारार्थं भुवमवतीर्णः प्रभुः भगवान् दानवान् दैत्यांश्च अवधीत्। नरसिंहेन हतेषु राक्षसेषु हिरण्यकशिपुः दैत्यः। 'प्रलयनृसिंहम्' इत्यादि द्वितीयचरणे नरसिंहस्य वीरत्वं वर्णितम्। वज्रायुधसदृशनखैः असुरान् प्राप्तभयांश्चकारेति तृतीयपादेन सूच्यते।'शान्तनृसिंहम्' इति तृतीयचरणे प्रह्लादस्तुत्या शान्तः नृसिंहः वर्णितः। तादृशा शान्तमूर्तिः नरसिंह एव श्रीवेङ्कटाचलाधीश इति निगमनम्। अनेन आचार्यवर्येण स्वसङ्कीर्तनायां त्रिषु चरणेषु भागवतकथाक्रम एव स्वीकृत इति स्पष्टं ज्ञायते।

## सम्पादकीयम्

# श्रीस्वामिनः अक्षरलक्ष्मीः ''सप्तगिरिः''

प्रजासु भक्तेः सत्प्रवर्तनायाः, सदाचारस्य, धर्माचरणादीनां च वर्धने धार्मिकपत्रिकानां स्थानं विशेषतया वर्तते। तस्मिन्नपि तिरुमलतिरुपतिदेवस्थानेन प्रचुर्यमाणा 'सप्तगिरि' धार्मिकमासपत्रिका इतोऽपि विशिष्टा। प्राचीनकाले यदि प्रजासु धर्मसन्देहाः भवन्ति चेत् तर्हि आश्रमेषु, महर्षीणां पार्श्वे वा गच्छन्ति स्म। अस्मिन् यान्त्रिकयुगे धर्मसन्देहानां निवारणपूर्वकम् आध्यात्मिकसन्देशान् ज्ञापयन् साक्षात् जिज्ञासूनां गृहस्य पुरतः सप्तगिरीशस्य प्रसादरूपेण 'सप्तगिरि' धार्मिकमासपत्रिका प्राप्यते।

भक्तेभ्यः पाठकेभ्यश्च तिरुमलेशस्य चारित्र्यं, श्रीस्वामिनः दर्शनवेलाः, सेवाः, उत्सवाः, वासादयः च सुस्पष्टतया विवरणार्थं सङ्कल्प्य तेलुगु-तमिल-कन्नड-हिन्दी-आङ्गलम्-संस्कृतभाषासु 'सप्तगिरिः' उपलभ्यते। स्वीयं परिधिम् इतोऽपि विस्तारयन् भक्तेभ्यः आध्यात्मिकसेवाः कल्पयति। तिरुमल श्रीस्वामिनः आलयेन सह देवस्थानानुबन्धालयानां समाचाराः, वेद - पुराण - इतिहासानां सम्बन्धिताः विशेषाः, सङ्गीतादिललितकलानां विषयेऽपि सुष्ठु अवगाहनं कारयति अस्माकं (भवताम्) धार्मिकमासपत्रिका 'सप्तगिरिः'। एवं रूपेण आध्यात्मिक - सांस्कृतिकरङ्गेषु मार्गोपदेशिका 'सप्तगिरि' पत्रिका अनया सञ्चिकया '५०' वर्षे प्रविष्टा। अत्र किञ्चित् कालं सिंहावलोकनं कृत्वा भक्तलोकाय इतः पूर्वं प्रदत्तविषयान् स्मृत्वा इतोपि ज्ञातव्यविषयान् प्रददाति इति विनम्रतया ज्ञाप्यते। पत्रिकाप्रचुरणविषये, शीर्षकानां, मुखपत्रचित्राणां च विषये 'सप्तगिरिः' सर्वाङ्गसुन्दरतया प्रकाशतु इति तिरुमलतिरुपतिदेवस्थानयाजमान्यं विशेषतया कृषिं करोति। प्रतिमासं गृहं प्रति आगम्यमानां पत्रिकां साक्षात् श्रीवेङ्कटेश्वरप्रसादमिति मत्वा ये भक्ताः श्रद्धया स्वीकुर्वन्ति तेषां विश्वासं इतोऽपि दृढीकुर्मः इति विनयेन ज्ञापयामः। अस्य कृते 'सप्तगिरि' अभिवृद्धये पाठकाः स्वीय सहकारं, सूचनाः, अभिप्रायाः सूचयन्तु इति आशास्महे।

श्रीवेङ्कटेश्वरस्य सम्पूर्णानुग्रहेण 'सप्तगिरिः' ५० तमे वर्षे प्रविश्यमाने शुभसन्दर्भे, भवन्तः स्वीय बन्धुमित्रैः साकं 'ग्राहकत्वं' स्वीकृत्य श्रीस्वामिनः प्रसादतया 'सप्तगिरिं' प्राप्नुवन्तु। अन्येभ्यः अपि सूचयित्वा ग्राहकरूपेण कारयन्तु।

श्रीवेङ्कटेश्वरस्य भक्तिप्रचारेण साकं, सनातहिन्दूधर्मप्रचारः एव श्वासरूपेण भाव्य 'सप्तगिरि' अभिवृद्धये प्रोत्साहनं कुर्वन्तु इति एवञ्च सप्तलोकाधीशः सप्तगिरीशः अस्मत् इहपरसौख्यान् प्रसादयतु इति प्रार्थयामः।

**वेङ्कटेशसमो देवो न भूतो न भविष्यति!**

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०३

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

# सप्तगिरिः

## जून् - २०१९

श्रीविकारीनामसंवत्सरस्य वैशाखकृष्णत्रयोदशी तः ज्येष्ठकृष्णद्वादशी पर्यन्तम् - १९४१


| | |
|---|---|
| सुप्रभातम् रमणीयस्तोत्रम् | 06 |
| - डा. पि.वेङ्कटाचलपितः | |
| योगदर्शनपरिचयः | 09 |
| - श्री डि.हरिकृष्णः | |
| भगवद्गीता-प्रदत्तम् आचरणात्मकं ज्ञानम् | 10 |
| - श्री अङ्कुरवत्सः | |
| जलजनिवासिन्यः जलविहारोत्सवः | 15 |
| - श्री चैतन्यः | |
| तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः | 18 |
| - श्रीमती दुर्गा | |
| देवभक्तः | 21 |
| औषधगुणानां समाहारः हिङ्गुः | 22 |
| - श्री अमरनाथशर्मा | |





गौरवसम्पादकः:-
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


मुखचित्रम् - श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः, तिरुमल

अन्तिमरक्षापुटः - श्रीपद्मावतीदेव्याः प्लवोत्सवः तिरुचानूरु

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।

*— प्रधानसंपादकः*


**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,

सूचनानाम्, आक्षेपाणां च कृते

sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-

# सुप्रभातम्

## रमणीयस्तोत्रम्

- डा. पि.वेङ्कटाचलपतिः



**श्री वैकुण्ठविरक्तस्य भगवतः श्रीवेङ्कटेश्वरस्य सुप्रभातस्तोत्रमिदं स्वीयोद्धरणार्थं न कृतम्, अपि च समस्तभक्तलोकपक्षतः निवेदितं स्तवम्। भगवदनुग्रहेण प्राप्तस्य मानवजन्मसाफल्यं हरिनामस्मरणेनैव सिध्यति।**

परब्रह्मवाच्यः सत्यं ज्ञानमनन्तं ब्रह्म इति महावाक्यस्य सूचकत्वेन अनन्तः, निर्विकारः, निरञ्जनः सर्वव्यापी च भगवान् विष्णुः -

**भक्तौघानुग्रहार्थाय त्यक्त्वा वैकुण्ठमुत्तमम्**
**धरण्यामवतीर्णोऽसि वरेण्यो वरदोऽर्चितः।।**

इति भक्तानामघनिवारणार्थं, ज्ञानैश्वर्यानन्दमोक्षप्रदानार्थं च कलियुगे प्रत्यक्षदेवः श्रीवेङ्कटेश्वरो भूत्वा

**अश्वत्थादि समस्तसन्निधो महा ऐरम्मदीयादिकं**
**वैकुण्ठं च विहाय वै कलियुगे चैश्वर्यमत्यद्भुतम्।**
**भूवैकुण्ठमसौ निवासमकरोत् सप्ताद्रिवासी महान्**
**भक्तानुग्रहतत्परं दिशति यो रक्षां च सो दीव्यति।।**

इत्यनेन परंधामम्, ऐरम्मदीयम्, अश्वत्थं, हिरण्मयभवनम्, अपराजितम् इत्यादिपरमानन्दस्थानैः भासमानम् अत्यन्तसुन्दरं वैकुण्ठं विहाय स्वामिपुष्करिणी तटे आनन्दनिलये स्वयंव्यक्त अर्चास्वरूपेण विराजते।

निर्निद्रस्य परमात्मनः निद्रा कुत्र। भान्विन्दुनेत्रयुगलस्य कालस्वरूपस्य दिवारात्रं कुत्र। तथापि केवलम् औपचारिकरूपेण आधिगतयोगनिद्रं स्वामिनं प्रतिदिनं उषसि उत्थापयन्ति सुप्रभातस्तोत्रादिकं श्रावयन्ति। प्रकृष्टज्ञानप्रदायकं सुप्रभातस्तोत्रं परमात्वतत्त्वं जागर्ति। नाहं कर्ता हरिः कर्ता इति शरणगतिरेव स्तोत्रस्यास्य सारः। प्रभाते ब्राह्मीमुहूर्ते वेङ्कटाचलक्षेत्रे अर्चकाः, ताळ्लपाकवंशीयाः, कैङ्कर्यपराः महाद्वारं प्राप्य कुञ्चेकोल इति नाम्ना व्यवह्रीयमाण कुञ्चिकया द्वारमुद्घाट्य अन्तः प्रविशन्ति। समनन्तरमेव **कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते** इति सुप्रभातस्तोत्रमारभ्यते।

विश्वामित्रः यागसंरक्षणार्थमागतं श्रीरामं प्रभाते उत्थापयन्, पुरुषोत्तमस्य श्रीरामचन्द्रस्य मुखसौन्दर्यं वीक्ष्य **कौसल्यासुप्रजा राम** इति स्तुवन् धर्माचरणार्थं तं प्रबोधयति।

**कृते तु नारसिंहोऽभूत् त्रेतायां रघुनन्दनः**
**द्वापरे वासुदेवश्च कलौ वेङ्कटनायकः।।**



इत्यनेन कृतयुगस्य नृसिंह एव त्रेतायुगे श्रीरामः, द्वापरे श्रीकृष्णः, कलौ श्रीवेङ्कटेश्वर इति विख्यातः। निराकार-निर्गुणविश्वव्याप्तविशुद्धचैतन्यं साकारसगुणरूपमाराधयितुं सुप्रभातस्तोत्रमत्यन्तमावश्यकम्। महाभक्तः प्रतिवादभयङ्कर हस्तगिरि अण्णन् महाशयः वेङ्कटाचलक्षेत्रे श्रीवेङ्कटेशस्य पुरतः प्राञ्जलिः स्थित्वा, सौन्दर्यातिशयविग्रहसंदर्शनेन प्राप्त दिव्यानुभूत्या भूलोकवैकुण्ठात् निजवैकुण्ठं प्राप्य, शेषशायिनि महाविष्णौ श्रीरामं, श्रीकृष्णं, श्रीनिवासं च दृष्ट्वा जगत्कल्याणार्थं भगवन्तं प्रबोधयितुं कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते इति श्लोकेनैव सुप्रभातस्यारम्भं कृतवन्तः।

**उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठगरुडध्वज।**
**उत्तिष्ठकमलाकान्त त्रैलोक्यं मङ्गलं कुरु।।**

श्लोकेस्मिन् चतुर्वारमुतिष्ठशब्दप्रयोगः मनोबुद्धिचित्ताहङ्काराणां व्युत्थानमुपदिशति। अज्ञानादन्तःकरणचतुष्टयमुत्थाप्य, गोविन्दनाम-स्मरणेन चतुर्विधपुरुषार्थप्रदायकं गरुडध्वजस्य दर्शनं प्राप्य, मङ्गलं तनोतु इति प्राञ्जलिः श्रीनिवासं नमस्करोति। हृदयेश्वर्याः महालक्ष्म्याः उत्थानं विना श्रीनिवासः नोत्तिष्ठतीति जगन्मातरं परमपुरुषस्य वेङ्कटाचलपतेः वक्षोविहारिणीम् आश्रितकल्पवल्लीं प्रबोधयति -

**मातः समस्तजगतां मधुकैटभारे वक्षोविहारिणि मनोहरद्वियमूर्ते।**
**श्रीस्वामिनि श्रितजन प्रियदानशीले श्रीवेङ्कटेशदयिते तव सुप्रभातम्।।**

इति।

अत्रान्तरे महाविष्णुं दिदृक्षमाणः सप्तर्षयः सन्ध्यामुपास्य मनोहराणि आकाशसिन्धुकमलानि आदाय तव चरणकमलमर्चयितुं निरीक्षणमाणाः

**महाभक्तः प्रतिवादभयङ्कर हस्तगिरि अण्णन् महाशयः वेङ्कटाचलक्षेत्रे श्रीवेङ्कटेशस्य पुरतः प्राञ्जलिः स्थित्वा, सौन्दर्यातिशयविग्रहसंदर्शनेन प्राप्त दिव्यानुभूत्या भूलोकवैकुण्ठात् निजवैकुण्ठं प्राप्य, शेषशायिनि महाविष्णौ श्रीरामं, श्रीकृष्णं, श्रीनिवासं च दृष्ट्वा जगत्कल्याणार्थं भगवन्तं प्रबोधयितुं कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते इति श्लोकेनैव सुप्रभातस्यारम्भं कृतवन्तः।**

सन्तीति विनिवेद्यते। भवद्दर्शनकांक्षिणः पञ्चाननाब्जभवषण्मुख -वासवाद्याः देवाः त्रिविक्रमावतारवैशिष्ट्यं स्तुवन्ति, बृहस्पतिः वासरशुद्धिं च पठति। पात्रावशिष्टकदलीफपायसानि भूक्त्वा शुकाः तव सुप्रभातं च पठन्ति। नारदः तव अनन्तचरितं तन्त्रीप्रकर्ष -मधुरस्वनया विपञ्च्या गायति। दिविषत्परिषत्प्रधानाः सूर्येन्दुभौमबुधवाक्पति काव्यसौरिस्वर्भानुकेतुग्रहाः त्वद्दासदासाः भूत्वा भवन्तं सेवन्ते। वैदिकशिखामणयः हेमघटेषु पूर्ण एलालवङ्गघनसारसुगन्धिदिव्यं तीर्थं शिरसि घृत्वा तव सेवार्थं तिष्ठन्ति। विहगराज -मृगादिराज-नागाधिराज-राजराज-हयाधिराजाः स्वस्वाधिकारमर्थयन्तः द्वारे स्थिताः सन्ति। प्रभाते नन्दव्रजे गोपकान्ताः दधिमन्थनघोषैः भवन्तमुत्थापयत्यः सन्ति इत्यादि बहुविधप्रार्थनेनापि न जागर्ति इति मत्वा -

**श्रीपद्मनाभपुरुषोत्तमवासुदेववैकुण्ठमाधवजनार्दन चक्रपाणे।**
**श्रीवत्सचिह्नशरणागतपारिजात श्रीवेङ्कटाचलपते तव सुप्रभातम्।।**

इति भक्तस्य प्रार्थनां श्रुत्वा यावच्छ्रीनिवासः उत्तिष्ठति, तद्वक्षःस्थलनित्यनिवासिनीं जगन्मातरं -

**कमलाकुचचूचुक कुङ्कमतो नियतारुणितातुलनीलतनो।**
**कमलायतलोचनलोकपते विजयी भव वेङ्कटशैलपते।।**

इति स्तौति।



चातुर्यं भूषणं नार्या उद्योगो नरभूषणम्।।

ततः

विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ।।

त्वां विना नाऽन्यः गतिः, सर्वदा मां प्रसीद, प्रियं प्रयच्छ इति देवं संप्रार्थ्य,

अहं दूरतस्ते पदांभोजयुग्म प्रणामेच्छयागत्य सेवां करोमि।
सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश।।

इति सुदूरतः तव चरणकमलसेवेच्छया अहमागतोऽस्मि। प्रतिदिनं भवत्पादसेवाभाग्यं प्रायः नैव लभेत, अतः सकृत्सेवया नित्यसेवाफलं प्रयच्छ इति श्रीनिवासं प्रार्थयति। आत्मज्ञानराहित्यात् कृतं समस्तमपि पापं निवारयतु इति प्रार्थयन्-

अज्ञानिना मया दोषान् अशेषान्विहितान् हरे।
क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे।।

इति मम अज्ञानं निवारय इति विनिवेद्यते। एवं रीत्या बहुप्रार्थनेनोत्थितस्य श्रीनिवासस्य पादयुगलं दृष्ट्वा, न स्तोत्रादिकं भगवन्तं प्राप्नुवन्ति अपि च संपूर्णशरणागतिरेवाश्रयणीय इति संचिन्त्य आदौ जगन्मातुः अनुग्रहादेव पुरुषोत्तमस्य दर्शनं प्राप्तमिति मत्वा -

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षः स्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम्।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम्।।

इति प्रकृतिस्वरूपिणीं मातरं नमस्करोति। ततः

श्रीमन् कृपाजलनिधे कृतसर्वलोक सर्वज्ञ शक्त नतवत्सल सर्वशेषिन्।
स्वामिन् सुशील सुलभाश्रितपारिजात श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।।

इति पादद्वयं नमस्कृत्य

रेखामयध्वजसुधाकलशातपत्र
वज्राङ्कुशाम्बुरुह कल्पक शङ्खचक्रैः।
भव्यैरलङ्कृततलौ परतत्वचिह्नैः
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये।।

इति भक्ताननुगृहीतुं चरणयुगले विद्यमानं शङ्ख-चक्र-ध्वज-अङ्कुश-कलशादिपरतत्त्वचिह्नसहितपादवैभवं स्तुवन् कलियुगवैकुण्ठनाथस्य श्रीवेङ्कटेशस्य दर्शनानन्देन

श्रीवेङ्कटाद्रि श्रृङ्गाग्र मङ्गलाभरणाङ्घ्रये।
मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम्।।

इति समस्तमङ्गलप्रदायकस्य मङ्गलाशाशनं कुर्वन्

आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम्।
अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम्।।

इति भूयो दर्शनेनापि अतृप्त्यमृतरूपदर्शनं वारं वारमिच्छन् बाह्यस्मृतिं प्राप्य पार्श्वस्थं गुरुं विलोक्य

श्रीमत्सुन्दरजामातृमुनिमानसवासिने
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम्।।

इति सानन्दं सभक्ति साष्टाङ्गं श्रीवेङ्कटेश्वरं प्रणम्य शरणागतिं प्रकटयति।

बहुजन्मकृतपुण्यफलेन लब्धमनुष्यजन्मस्य चरितार्थं भगवन्नामस्मरणेनैव सिध्यतीति भगवन्नामस्मरणवैभवं सुप्रभातस्तवे सुस्पष्टम् अण्णन् स्वामिना।



# योगदर्शन परिचयः

- श्री डि. हरिकृष्णः

**वैदिकजीवनपद्धतिः धर्मार्थकाममोक्षरूपिणि पुरुषार्थचतुष्टये आश्रिता वर्तते। अन्तिमः पुरुषार्थः एव जीवनस्य अन्तिमम् उद्देश्यम् अस्ति। तदर्थमेव दर्शनशास्त्राणां प्रवृत्तिः जायते। यद्यपि सर्वाणि दर्शनानि स्व-स्व सिद्धान्तानुसारं मोक्षस्य निरूपणमकुर्वन् तथापि योगदर्शनं मोक्षस्य कृते साक्षात्कृतयत्नो विधीयते। मोक्षस्य कृते एव योगस्य उदयः सञ्जातः।**



आत्मनः परमात्मनि विलय एव योग उच्यते। यदा त्रिविध दुःखानाम् निवृत्तिर्भवति, तदा आत्मा स्वरूपे विलीनो भवति। तत्पश्चात् जनन - मरणादयः पुनः न जायन्ते। अस्य आत्मसाक्षात्कारस्य शास्त्रीयं मार्गदर्शकं योगशास्त्रमस्ति। यतो हि वेदेषु उपनिषत्सु च योगस्य सोपायं वर्णनं प्राप्यते। ऋषयोऽपि योगेन एव मन्त्राणां साक्षाद्दर्शनं कृतवन्तः।

योगदर्शनं दर्शनेषु अत्यतमम्। अस्य शास्त्रस्य रचयिता महर्षिः पतञ्जलिः। अयं पतञ्जलिः जीवः ईश्वरश्चेति तत्वद्वयं स्वीकरोति। अत एव अस्य दर्शनस्य 'सेश्वरसांख्यदर्शनम्' इति नामान्तरम्। यद्यपि पतञ्जलेः पूर्वाचार्याः हिरण्यगर्भयाज्ञवल्क्यादयः अनेके आचार्याः योगशास्त्रस्य प्रवक्तारः आसन् अथापि जनसाधारणानां कृते पतञ्जलिरेव तं योगशास्त्रं सूत्ररूपेण ग्रन्थीकृत्य सम्यक् सरलरीत्या व्याजहार इति हेतोः अस्य योगदर्शनस्य 'पातञ्जलदर्शनम्' इति नाम सयुक्तिकं तिष्ठति।

अस्मिन् योगशास्त्रे चत्वारः पादाः सन्ति। तेषां नामानि क्रमाद् भविष्यन्ति - समाधिपादः, साधनपादः, विभूतिपादः, कैवल्यपादश्चेति। तत्र चित्तवृत्तयः - प्रमाणविपर्ययविकल्पादयः। एतेषां निर्वर्तनं योगशब्दार्थः।

समाधि शब्दस्यार्थः - सम्यक् आधानम् इति। अर्थात् चित्तस्य स्वात्मस्वरूपे अवस्थापनमिति।

द्वितीये साधनपादे - 'तपः स्वाध्यायेश्वर प्रणिधानानि क्रियायोगः' इत्यादि सूत्रैः चञ्चलचित्तपुरुषाणां तपः स्वाध्यायादिक्रियायोगः एवं यमनियामादि बहिरङ्गसाधनभूतानां तत्वानामुलपेखः वर्णितः। योगशास्त्रे तपः प्रसन्नकारणात्मकं वर्तते न तु पीडात्मकम्। तृतीये विभूतिपादे - जन्मान्तज्ञानं, भूतभविष्यदर्थकं ज्ञानम् अन्तर्हितम् इत्यादि अनेकप्रकाराः सिद्धयः उपन्यस्ताः। चतुर्थे कैवल्यपादे ''जन्मोषधिमन्त्रतपः समाधिजाः सिद्धयः'' इति सूत्रेण पञ्चानां सिद्धीनां वर्णनं करोति। अस्मिन् योगशास्त्रे षड्विंशति तत्वानि भवन्ति। यथा सांख्याभ्युपगतानि पञ्चविंशतितत्वानि, एतेषामतिरिक्तत्वेन एकः ईश्वरः अस्तीति ईश्वरतत्वमपि पतञ्जलिरयं स्वीकरोतीत्यतः अस्य नाम सेश्वरवादी सांख्यः इति। ईश्वरस्य लक्षणमेवं पतञ्जलिः प्रतिपादयति 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति।



# भगवद्गीता-प्रदत्तम्

## आचरणात्मकं ज्ञानम्



ज्ञानविज्ञाने पृथक्-प्रथक् पदे। कस्यचिदपि विषयस्य सिद्धान्तरीत्या अवगाहनं ज्ञानमित्याचक्षते। ज्ञानस्य आचरणात्मकरीत्या व्यक्तीकर्तुं प्रेरयति विज्ञानम्। एनमेव गीतायां 'सविज्ञानम्' इत्युक्तम्। नैजे तावत् भगवद्गीता अत्यन्त क्लिष्टस्थितौ वर्णिता। तस्मिन्नपि अत्यन्तक्लिष्ट मनस्काय वर्णिता इयम्।

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः

संस्कृतानुवादः - श्री अङ्कुरवत्सः

प्रत्येकः मनुष्यः जीवने अथवा स्वकार्येषु विजयं प्राप्तुम् इच्छति एव। स्वीयकार्येषु पराजयं प्राप्तुं कोऽपि न वाञ्छति। किन्तु विजयस्य आवश्यकता नास्त्येव इति वक्तुं शक्तः एकैकः व्यक्तिः अर्जुनः। विजयस्य, तेन आगम्यमानं सुखमपि न इच्छामीति सः प्रोक्तवान्। एवं मनस्कस्य कृते भगवद्गीता अद्भुतविजयं प्रापितवती। भगवद्गीतया उच्यमानस्य आचरणात्मकज्ञानस्य इदमेव निदर्शनम्। गीताज्ञानं पलायनरतान् न निर्माति। किन्तु कस्मिन्नपि क्लिष्टस्थितौ कथं विजयं प्राप्तुं शक्यते इति बोधयति। अत एव गीताज्ञानम् आचरणात्मकं ज्ञानम्।

एनमेव विषयं सोदाहरणतया निरूपितुं गीताचार्यः केचन कार्यान् बोधितवान्। प्रत्येकः मनुष्यः जीवने प्रतिदिनं केचन कार्यक्रमाः कुर्वन्नेव भवति। ते च अनिवार्याः। आहारभक्षणं, शयनं, विहारे भागग्रहणादिः..। परन्तु एनानेव कार्यान् भगवद्गीतायामुक्तप्रकारेण आचरणं कुर्मः चेत् विजयः निश्चितः। स्वेच्छाचरणेन वैफल्यः निश्चितश्च। एनं विषयं श्रीकृष्णभगवान् बहु स्पष्टतया वर्णयन् - 'हे अर्जुन! मनुष्यः अतिभक्षणेन, अथवा अल्पभक्षणेन, अतिनिद्रया, अल्पनिद्रया च योगी न भवति'। इत्युक्तवान् (भ.गी.६.१६) कोऽपि वा जीवने कष्टान् प्राप्नोति अथवा अपजयान् प्राप्नोति इत्युक्ते सः एनयोः एकः अवश्यं वर्तते इति अवगन्तव्यम्। अनेन श्लोकमाध्यमेन गीताचार्यः विद्यार्थीनाम् पुरतः आगम्यमानानामपजयानां रहस्यं विवृतवान्। समस्यायाः परिष्कारः अपि तत्र एव व्यक्तीकृतवान्। 'आहारं, निद्रां, विहारं, कार्याचरणानि च यः क्रमीकरोति सः योगसाधनया समस्तभौतिकक्लेशान् निवारयति।' (भ.गी.६.१७)

अर्थात् भगवद्गीतया उक्तप्रकारेण ये विद्यार्थिनः उन्नतिं प्राप्नुवन्ति। नैजे तावत् अयमेव योगः। एवं यदि पश्याश्चेत् भगवद्गीतायाम् आचरणे असाध्यविषयः न उक्तः। गीता स्व मातापितरौ इव लाभं प्रापयितुं समर्था।

आहारविषये विद्यार्थिनः शाकाहारिणः भवन्ति चेत् बहुलाभं प्राप्नुवन्ति। जातिपिता गान्धीवर्यः शाकाहारी, पूर्वराष्ट्रपतिः शास्त्रवेत्ता डा।।अब्दुल्कलाम् वर्यः शाकाहारी, प्रपञ्चप्रख्यातः ऐजाक् न्यूटन् शाकाहारी एव। अतः शाकाहारेण विद्यार्थिनः बहु उत्तमतया अग्रे गच्छन्ति। विद्यार्थिनः श्रीवेङ्कटेश्वरस्वामिनः मन्दिरं गत्वा, दर्शनं कृत्वा पार्श्वे स्थिते उद्यानवने विहरणं कुर्वन्ति चेत् मनः, देहश्च सम्यक्तया भवतः। मध्ये मध्ये नेत्राभ्यां भगवल्लीलाविशेषान् पुस्तकान् पठतः तर्हि तदपि मानसिकोल्लासं जनयति, बुद्धिविकासश्च भवति। निद्रां कदापि न तिरस्कुर्यात्। निद्रासमये देहः, बुद्धिश्च विश्रान्तिं प्राप्य द्विगुणकार्यं कर्तुं सिद्धौ भवतः। तत्तत् स्तरेषु, रंगेषु वा अनुभवज्ञैः सह साङ्गत्यम् अस्मान् उन्नतिमार्गे गमयति। किं कर्तव्यम्? किमकर्तव्यमिति विचक्षणया जीवनं सरलं सुखमयं च भवति।

# तिरुमलायां २०१९ एप्रिल् १७ तः १९ पर्यन्तं श्रीस्वामिने, श्रीकोदण्डरामस्वामिने, श्रीकृष्णस्वामिने च कृतः वसन्तोत्सवः


श्रीदेवीभूदेवी समेताय श्रीस्वामिने सहस्रधाराभिषेकः


उभयदेवीभ्यां साकं श्रीस्वामिने, श्री सीतालक्ष्मणसमेत श्री कोदण्डरामस्वामिने, श्री रुक्मिणीकृष्णस्वामिने च आचरितस्य स्नपनतिरुमञ्जनस्य दृश्यम्


श्री स्वामिनः स्वर्णरथः


तिरुमल पुरवीथिषु भ्रमन्तः उभयदेवीभ्यां सहितः श्रीस्वामी, श्रीसीतालक्ष्मणसमेतः कोदण्डरामस्वामी, श्रीरुक्मिणी कृष्णस्वामी च

## ओण्टिमिट्ट श्रीकोदण्डरामस्वामिने
## २०१९ एप्रिल् १२ तः २१ पर्यन्तम् अत्यन्तवैभवेन समाचरितः ब्रह्मोत्सवः



ध्वजारोहणम्



हनुमद्वाहनम्



पुरवीथिषु सञ्चरन् श्रीरामचन्द्रमूर्तिः



ऊञ्जलसेवायां श्रीसीतारामलक्ष्मणमूर्तयः



गरुडवाहनम्



नवनीतकृष्णालङ्कारः



श्री कोदण्डरामस्वामिनः आलयः, ओण्टिमिट्ट

## ओण्टिमिट्ट, श्रीकोदण्डरामस्वामिने
## २०१९ एप्रिल् १८ दिनाङ्के वैभवेन समाचरितस्य कल्याणोत्सवस्य दृश्यम्



श्रीसीतराममूर्ती



श्रीसीतारामकल्याणम्





आन्ध्रप्रदेश राज्यसर्वकारपक्षतः श्रीसीतारामकल्याणार्थं कौशेयवस्त्राणां समर्पणम्
उभयराज्य (आन्ध्र-तेलङ्गाणा) गवर्नर् श्री इ.एस.एल.नरसिंहन् दम्पती: तथा आन्ध्रप्रदेशमुख्यमन्त्रि: श्री नारा चन्द्रबाबुनायुडु दम्पती:





श्रीसीतारामकल्याणोत्सवे भागग्रहीतारः भक्ताः



विद्युत् कान्तिषु
श्रीकोदण्डरामस्वामिनः आलयः,
ओण्टिमिट्ट

# तिरुपति श्रीकोदण्डरामस्वामिने २०१९ एप्रिल् १५, १६ दिनाङ्कयोः वैभवेन समाचरितस्य कल्याणोत्सवस्य एवं पट्टाभिषेकस्य दृश्याणि



श्रीसीतारामकल्याणम्



श्रीसीतारामपट्टाभिषेकः





श्रीसीतारामकल्याणार्थं माङ्गल्यं, श्रीगोविन्दराजस्वामि ति.ति.दे. पक्षतः ददत् कुर्वन्
तिरुमल संयुक्तकार्यनिर्वहणाधिकारी श्री के.एस्.श्रीनिवासराजु, ऐ.ए.एस्. वर्यः

श्रीसीतारामपट्टाभिषेकार्थं स्वर्णकिरीटं ति.ति.दे. पक्षतः समर्पयन्
तिरुपति संयुक्त कार्यनिर्वहणाधिकारी श्री पि.लक्ष्मीकान्तम्, ऐ.ए.एस्., वर्यः



# जलजनिवासिन्याः जलविहारोत्सवः!
## (प्लवोत्सवः)

तेलुगु मूलम् - श्री जे. बालसुब्रह्मण्यम् संस्कृतानुवादः - श्री चैतन्यः

जलज इत्युक्ते पद्मम्। तच्च सहस्रदलैर्युतम्। प्रायः पञ्चसहस्रवर्षेभ्यः प्राक् श्रीवेङ्कटेशस्य तपःफलरूपेण तस्मिन् स्वर्णपद्मे साक्षात् 'श्रीमहालक्ष्मीः' आविर्भूता। पद्मे आविर्भावः जातः इति कारणात् सा पद्मावती इति सुप्रसिद्धा। तस्याः कृते आचर्यमाणस्य प्लवोत्सवविषये किञ्चित् ज्ञास्यामः।

सा इदानीमेव न, अपि तु पुरा अपि क्षीराब्धिकन्यतया, पद्मासनितया, जलजनिवासिनितया, भृगुमहर्षेः तनया रूपेण, भूमिजा(सीता) रूपेण एवञ्च कलियुगे आकाशराज्ञः पुत्रिका 'पद्मावती' रूपेण च एवम् अनन्तरूपकाले बहुवारम् अवतरणं प्राप्तवती।

एवं श्रीपद्मावतीदेवी तिरुमल आनन्दनिलये श्रीनिवासस्य वक्षस्थले 'व्यूहलक्ष्मी' रूपेण, तिरुचानूरु क्षेत्रे शान्तिनिलयमिति कथ्यमाने स्वर्णभवने 'पद्मावती' 'अलमेलुमङ्गा' इति नामभिः अर्चामूर्तिरूपेण स्थित्वा भक्तान् आनन्दयति।

गम्भीरतया स्थितस्य भयप्रापकस्य समुद्रराज्ञः पुत्रिका एव लक्ष्मीदेवी। तथापि सा प्रशान्तरूपेण दर्शनं यच्छती भक्तवाञ्छाः पूरयति। तया साकं समुद्रात् कामधेनुः, कल्पवृक्षश्च अवतृतौ। 'चिन्तामणिः' अपि आविर्भूतः। अपि च चन्द्रसहोदरी सा माता भक्तेभ्यः शान्तिप्रदाने कदापि न न्यूना।

श्रीवैकुण्ठे क्षीरसमुद्रे सहस्रफणियुता आदिशेषरूपी प्लवोपरि स्व स्वामिना सह स्थिता सिरिलक्ष्मीः, भूलोकवैकुण्ठरूपी तिरुमलायां श्रीस्वामिनः हृदयप्लवोपरि विहरणशीला अलमेलुमङ्गा, अधुना ज्येष्ठमासे, पूर्णिमा कौमुदी रात्रिषु शीतपद्मसरसः पुण्यजलेषु जलविहारं कुर्वती भक्तेभ्यः दर्शनं यच्छति।

ज्येष्ठमासे एकादशी तः पौर्णिमा पर्यन्तं पञ्चदिनानि यावत् प्रचाल्यमानेषु प्लवोत्सवेषु प्रथमदिने सायंकाले रुक्मिणी सत्यभामा समेतः श्रीकृष्णः पद्मसरोवरे प्लवोपरि विहरणार्थम् आलयसकाशात् छत्र - चामर - वाद्यादि मर्यादाभिः श्रीपीठोपरि (तिरुच्चि) निर्गत्य, आलयप्रदक्षिणतया भ्रममाणः पुष्करिणीं प्राप्य प्लवम् अधिरुहन्ति। विद्युत्कान्तिषु, वेदमन्त्रोच्चारण-दिव्यनादेषु, मङ्गलवाद्यानां वाद्यमाने सति अन्नमय्यसङ्कीर्तनाः श्रृण्वन् उभाभ्यां देवीभ्यां साकं श्रीकृष्णः सर्वशोभायमानतया अलंकृते प्लवे त्रिवारं प्रदक्षिणतया विहरति।

पुष्करिण्याः तटे चतुर्षु दिक्षु सहस्रशः भक्ताः स्वामिनः दर्शनं प्राप्य कृतकृत्याः भवन्ति। तदनन्तरं तिरुच्चि ऊपरि श्रीस्वामी आलयं प्रविशति।

द्वितीयदिने द्वादश्याः सायंकाले तिरुच्चि ऊपरि श्रीदेवी भूदेवी समेतः श्रीसुन्दरराजस्वामी विहरन् पुष्करिण्यां प्लवोपरि त्रिवारं प्रदक्षिणमार्गे भ्रमन्, आरार्तिक्यग्रहणं कुर्वन् आलयं प्रविशति।

तृतीयदिने त्रयोदश्यां सायंकाले श्रीपद्मावतीदेवी श्रीपीठे सर्वाभरणान्, पुष्पहारान् च अलङ्कृत्य भ्रममाणा पुष्करिणीं प्राप्य प्लवोत्सवे भागं गृह्णाति। पुष्करिण्यां प्रदक्षिणा त्रयं कृत्वा भक्तानां नीराजनान् स्वीकरणानन्तरं तिरुच्चि उपरि एव आलयं प्रविशति।

**तृतीयदिने त्रयोदश्यां सायंकाले श्रीपद्मावतीदेवी श्रीपीठे सर्वाभरणान्, पुष्पहारान् च अलङ्कृत्य भ्रममाणा पुष्करिणीं प्राप्य प्लवोत्सवे भागं गृह्णाति। पुष्करिण्यां प्रदक्षिणा त्रयं कृत्वा भक्तानां नीराजनान् स्वीकरणानन्तरं तिरुच्चि उपरि एव आलयं प्रविशति।**

ततः चतुर्थदिने चतुर्दश्यां रात्रौ कौमुद्यां श्रीपद्मावतीदेवी तिरुच्चि ऊपरि वैभवेन भ्रममाणा सती पुष्करिण्यां वेदनादानां सङ्कीर्तनानां च मध्ये पञ्चप्रदक्षिणान् कृत्वा भक्तान् हर्षयति। जलविहारस्य परिसमाप्त्यनन्तरं पुष्करिणीतः श्रीपद्मावतीदेवी स्वर्णगजवाहनोपरि समागत्य 'गजलक्ष्मीः' रूपेण भक्तेभ्यः दर्शनं यच्छती आलयं प्राप्नोति।

तदनन्तरं पञ्चमदिने पौर्णिमायाः पूर्णकौमुद्यां श्रीपद्मावती देवी तिरुच्चि ऊपरि भ्रममाणा सती सुष्ठुतया अलङ्कृतं प्लवम् अधिरुह्य, पद्मसरोवरस्य शीतलजले सप्तप्रदक्षिणान् कुर्वन्ती दर्शनं यच्छति। वेदनाद - वाद्य - अन्नमय्यकीर्तनानां मध्ये दिव्यमङ्गल-आरार्तिक्यान् स्वीकरोति। ततः अलमेलुमङ्गा पुष्करिणीतः स्वर्णगरुडवाहनोपरि मेलवाद्यैः पुरस्सरं भक्तानाम् आरार्तिक्यान् स्वीकुर्वन्ती पुरवीथिषु भ्रममाणा आलयप्रवेशनेन पञ्चदिनजलविहारोत्सवाः परिसमाप्यन्ते।

एवं पूर्णकौमुद्यां जलविहरणेन भक्तरञ्जितां चन्द्रसहोदरीं श्रीपद्मावतीम् एवं प्रार्थयामः -

"अज्ञानतिमिरं हन्तु, शुद्धज्ञानप्रकाशिका ।
सर्वैश्वर्यप्रदा मेऽस्तु, त्वत्कला मयि संस्थिता।।"

ॐ श्रियै नमः









# श्रीसुन्दरराजस्वामिनः अवतारोत्सवः

श्रीपद्मावतीदेव्याः आलयप्राङ्गणे एव दक्षिणस्यां दिशि प्राङ्मुखतया श्रीसुन्दरराजस्वामिनः आलयः विद्यते। १५-१६ शताब्देभ्यः प्राक् निर्मिते अस्यालयस्य गर्भालये तिरुमलश्रीवेङ्कटेश्वरस्वामिनः मूर्तिवत् श्रीसुन्दरराजस्वामिनः अष्टपदोन्नतः शिलाविग्रहमूर्तिः स्थिताऽस्ति। फाले श्वेतनामैः, शंखचक्रैः, वरदमुद्रहस्तेन चतुर्भुजः अत्यन्तसुन्दरः दृश्यतेति कारणात् सुन्दरराजस्वामीति सार्थकनामधेयः। एवं विराजमानस्य सुन्दरराजस्वामिनः उभयतः श्रीदेवी, भूदेव्योः मूलमूर्ती दर्शनं यच्छतः। बहु वर्षाणामनन्तरं महन्तानां पालने १९०६ ज्येष्ठमासे उत्तराभाद्रानक्षत्रे जीर्णोद्धारः जातः। तदा अवतारोत्सवः इति नाम्ना दिनत्रयं यावत् गर्भालयस्य शिखरोपरि स्वर्णकलशप्रतिष्ठा, महाकुम्भाभिषेकश्च अनिर्वहताम्। पुनः शतवर्षाणामनन्तरं २००६ जून् ज्येष्ठमासे उत्तराभाद्रानक्षत्रपर्यन्तं समाप्तिर्भवतु इति रीत्या दिनत्रयं यावत् 'महा अवतारोत्सवः' निर्वहितः। ततः आरभ्य प्रतिवर्षं ज्येष्ठमासे त्रिदिनपर्यन्तं वार्षिकावतारोत्सवः आचरन्ति। अस्मिन् वर्षे २०१९ जून् २३ तः २५ पर्यन्तं दिनत्रयं यावत् श्री सुन्दरराजस्वामिने वार्षिक अवतारोत्सवः आचरन्ति। त्रिषु दिवसेषु स्नपन-तिरुमञ्जनादयः, अर्चना - नैवेद्याः, सायंकाले विहरणादयः (भ्रमणम्) आचरन्ति। प्रथमदिने सायं श्रीदेवी भूदेवी समेतः श्रीसुन्दरराजस्वामी महाशेषवाहने एवञ्च द्वितीय, तृतीयदिनेषु सायंकाले स्वामिनं क्रमशः हनुमद्वाहने, गरुडवाहने च भ्रामयन्ति। अयं स्वामी पद्मावतीदेव्याः प्लवोत्सवसन्दर्भे द्वितीयदिने भागं गृहीत्वा जलविहारं करोति।



# श्रीकृष्णालयः



श्री पद्मावतीदेव्याः आलयं स्पृशन् दक्षिणस्यां दिशि श्रीबलरामकृष्णयोः आलयः विद्यते। कुरुक्षेत्रसङ्ग्रामसमये बलरामः यात्रां कुर्वन् अत्रत्यं शुकमहर्षिणः आश्रमं प्राप्तवान्। युद्धानन्तरं अग्रजमन्विषन् श्रीकृष्णः अपि इमं स्थानं प्राप्तवान्। श्री शुकमहर्षिः उभाभ्यामपि आतिथ्यं दत्वा, अभिज्ञानार्थं तत्रैव तिष्ठतामिति प्रार्थितवान्। एनं घट्टं स्मारयन् अयं आलयः स्थितः। अस्मिन् मन्दिरे रुक्मिणी-सत्यभामासमेतः श्रीवेणुगोपालस्वामी रूपेण स्थितः अयं स्वामी प्रथमदिने भूयमाने प्लवोत्सवे भागं गृहीत्वा जलविहारं करोति।



# तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः

तेलुगु मूलम् - श्रीमती मोलका उत्तरफल्गुणी

संस्कृतानुवादकर्त्री - श्रीमती दुर्गा

**१४.०६.२०१९ तः १६.०६.२०१९ पर्यन्तम् तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकसन्दर्भे...**

**साधुजनसंरक्षकाय, दुष्टजनशिक्षकाय, वेङ्कटाद्रिनिवासाय, श्रीवेङ्कटेशाय दिव्यवैखानसागमोक्तरीत्या वज्रमौक्तिकस्वर्णकवचसमर्पणेन त्रयाह्निकतया भूयमानः अयं ज्येष्ठाभिषेकः कामधेनुः भूत्वा सर्वसुखानां प्राप्तये हेतुभूता भवति। तस्मिन् पथे तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवकार्यक्रमविधिं विवरेण ज्ञास्यामः।**

भगवतः बिन्बं प्रतिष्ठाप्य, अर्चनादिना संपूज्य, तद्वारा सर्वसुखप्रापणं वैदिकमार्गे श्रेयोदायकम्। इदं सर्वदा आचरणीययोग्यम्, उत्कृष्टश्च। अस्य बिम्बस्य आकृतिं परिशीलयामश्चेत् तत् चित्र - चित्रार्थक - चित्राभासरूपेण भेदत्रयं ज्ञायते। अस्मिन् सर्वाङ्गैः युक्तं चित्रम्। सर्वाङ्गार्थ दृश्यं चित्रार्थकम्। अतिशयितकुड्यादिषु लिखितः चित्राभासः। (समूर्त-१८.११-३) एषां त्रयाणां प्राणप्रतिष्ठासमये समानार्हतां भजन्तीति अवगन्तव्यम्। एषु चित्र इत्यस्य प्रथमस्य महाङ्गः - अङ्गः - उपाङ्गः - प्रत्यङ्गः इति अवयवविभागः प्रोक्तः । तेषु

महाङ्गाः - कण्ठ - उदर - शिर - दक्ष - बाहु - कोष्ठ - ऊरु - पाणि - कटि - जङ्घाः।

अङ्गाः - नेत्र - नास - ओष्ठ - पाद - कर्ण - अङ्गुल्यः।

उपाङ्गाः - केश - रोम - नखाद्याः

प्रत्यङ्गाः - मकुट - भूषण - अम्बर - शङ्खचक्रे - शिरश्चक्रः - पादपद्मायुधाः - पीठः - प्रभाछत्राः (क्रिया-२३, ८०-२)

उपर्युक्तैः अङ्ग - उपाङ्ग - प्रत्यङ्गैः सहितां प्रतिमां निर्माय, आलये प्रतिष्ठाप्य नित्यं स्नपनाद्युपचारान् विधिना कर्तव्यम्। तस्मिन् नित्यं भूयमान स्नपनादि क्रियाभ्यः वा कारणान्तरेभ्यः अङ्गोपाङ्गप्रत्यङ्गाः यदि भिन्नाः तर्हि शान्तिमन्त्रैः प्रायश्चित्तोक्तरीत्या तुल्यहोमेन अङ्गसमुत्पत्तिं (सन्धानं) कृत्वा पुनः प्रतिष्ठां कारयेत्।

महाङ्गभिन्नः (सन्धानयोग्यरहितः) यदि स्यात् तर्हि तं बेरं भूमौ स्थाप्य, तस्योपरि अग्निकुण्डं निर्माय अङ्गहोमादि कार्यक्रमं कृत्वा तैनैव द्रव्येण पूर्ववत् बिम्बं निर्माय पुनः प्रतिष्ठां कारयेत्।



अङ्ग-उपाङ्ग-महाङ्ग-प्रत्यङ्गैः सहितः बिम्बः स्नपनादि विधिभिः यदि क्षीणतां प्राप्नोति तर्हि भृगुक्रियाधिकारे प्रोक्तदिशा सर्वप्रयत्नेन बिम्बस्य रक्षणावश्यकता वर्तते एव। अत एव बिम्बरक्षणार्थम् एका उत्सवक्रिया प्रोक्ता। तस्याः एव क्रियायाः ज्येष्ठाभिषेकः इति, सुगन्धतैलसमर्पणोत्सवः इति च नामान्तरौ। अस्मिन् प्रधानप्रक्रियायां बिम्बाय कवच-धारणविधानविषये किञ्चित् ज्ञास्यामः।

ज्येष्ठमासस्य ज्येष्ठानक्षत्रयुते दिने एनाम् उत्सवक्रियां निर्वहेत्। यागशालायां पौण्डरीकाग्निकुण्डं, सभ्याग्निश्च प्रत्येकतया निर्मीयात्। कूर्मपीठोपरि आचार्यः आसीनोभूत्वा क्रियाविधिं समग्रम् आचरेत्। महा - व्याहृतिभिर्युक्तान् वैष्णव-विष्णुसूक्त - सर्वदैवत्य - पारमात्मिकादिभिः होमं कृत्वा अनुहोमं कुर्यात्। पौण्डरीकाग्निकुण्डं प्राप्य महाशान्तिहोमः कुर्यात्। पूर्णाहुतिना युक्ताम् अस्तहोमक्रियाम् आचरेत्। उक्तरीत्या कवचविधिनिमित्तं प्रोक्तं क्रियाविधिं सर्वं कारयेत्। नित्यपूजाविधानेन देवदेवमाराधयेत्। पायसादिमहाहविं निवेदयेत्। क्षमामन्त्रैः देवदेवं प्रार्थयेत्। ब्रह्मघोषपूर्वकेन शान्तिवाक्यान् पठित्वा कार्यक्रमस्य परिसमाप्तिं कुर्यात्।

श्रीस्वामिनः मूलविराट्रूपे दिव्यसान्निध्यशक्तिं कौतुकबेरे स्थिते विग्रहे प्रतिनित्यम् आवाहनं कृत्वा, विधिपूर्वकतया आराधनां कुर्यात्। अयं ऐहिकामुष्मिकफलप्रदः इति प्रोक्तः। अर्थात् भौतिकेच्छारहिताः मोक्षेच्छुकाः सन् स्वामिनं ये सेवन्ते एवञ्च ये स्वेष्टकाम्यार्थ सिद्धिनिमित्तं स्वामिनं सेवन्ते तावुभावपि कौतुकबेराराधनां कुर्यास्तामिति वैखानसागमोक्तिः।

एवं प्रकारेण तिरुमलायां ६१४ तमे वर्षे पल्लवराणी सामवै पेरुन्देवी रजतविग्रहं श्रीभोगश्रीनिवासमूर्तिं बहूकृतवती, तच्च कौतुकबेरतया प्रतिष्ठामप्राप्नोत्। क्रमेण आलये जनरञ्जनाय उत्सवानां निर्वहणार्थं १३३९ वर्षे श्रीदेवी भूदेवी समेतः श्रीमलयप्पस्वामिनः पञ्चलोहविग्रहाः प्रतिष्ठापिताः।

स्नपनबेरतया उभयदेवीभ्यां साकं श्रीउग्र श्रीनिवासमूर्तये, बलिबेरतया श्रीकोलुवु श्रीनिवासमूर्तये च नित्यपूजाः क्रियन्ते। श्रीस्वामिनः आलये वर्षे ३६५ दिनेषु प्रायः ४७० उत्सवाः अत्यन्तवैभवेन निर्वहन्ति। वैखानसागमोक्तदिशा भूयामानेषु एषु उत्सवेषु भागतया श्रीमलयप्पस्वामिने अभिषेकाः, स्नपन-तिरुमञ्जनादयः कुर्वन्ति।

किन्तु, एवं रूपेण अभिषेकानामाचरणे बिम्बानां मूलस्वरूपे परिवर्तनानि भवितुमर्हन्ति। अस्य परिष्कारार्थं ९० तमे दशके श्रीस्वामिनः आलये संवत्सरोत्सवतया 'ज्येष्ठाभिषेकः' इति कथ्यमानः उत्सवः शास्त्रोक्तरीत्या निर्वहन्ति। 'ज्येष्ठमासे यदा पूर्णिमायां चन्द्रः ज्येष्ठानक्षत्रेण युतः भवति तदा देवदेवस्य विग्रहोपरि विशेषसुगन्धतैलसमर्पणं भवत्विति' भृगुः प्रकीर्णाधिकारे उल्लिखितवान्। एनमेव 'सुगन्धतैलसमर्पणोत्सवः' इति क्रियाधिकारे प्रोक्तम्। एनमुत्सवं वैखानसागमोक्तदिशा निर्वहणेन विष्णोः दिव्यार्चावतारः अमिततेजसा प्रकाशतीति क्रियाधिकारः ज्ञापयति। तिरुमलायां ज्येष्ठाभिषेकं ज्येष्ठशुक्लत्रयोदश्यामारभ्य, ज्येष्ठशुक्लचतुर्दशी तथा च ज्येष्ठपूर्णिमायां पूर्णोभवत्विविरीत्या दिनत्रयं यावत् वैभवेन आचरन्ति। ज्येष्ठाभिषेकमहोत्सवात् १५ दिनेभ्यः पूर्वं

श्रीस्वामिनः मूलविराट्रूपे दिव्यसान्निध्यशक्तिं कौतुकबेरे स्थिते विग्रहे प्रतिनित्यम् आवाहनं कृत्वा, विधिपूर्वकतया आराधनां कुर्यात्। अयं ऐहिकामुष्मिकफलप्रदः इति प्रोक्तः। अर्थात् भौतिकेच्छारहिताः मोक्षेच्छुकाः सन् स्वामिनं ये सेवन्ते एवञ्च ये स्वेष्टकाम्यार्थ सिद्धिनिमित्तं स्वामिनं सेवन्ते तावुभावपि कौतुकबेराराधनां कुर्यास्तामिति वैखानसागमोक्तिः।

श्रीस्वामिनः उत्सवमूर्तीनां अर्थात् 'श्रीदेवी भूदेवी समेत मलयप्पस्वामिने' गतवर्षे धारितान् स्वर्णकवचान् शोधयन्ति।

उत्सवनिर्वहणार्थं प्रत्येकतया 'कङ्कणभट्टर्' इत्युच्यमानाय वैखानस-अर्चकाय प्रधानाचार्यपदवीं ददति। प्रकीर्णाधिकारे प्रोक्तदिशा आचार्यस्वामी उत्सवमूर्तीनामुपरि स्वर्णकवचं 'परिलिखित' इति मन्त्रेण परिशोधयेत्। ततः स्वर्णकवचे लोपे सति तेषां संस्करणं सुशिक्षितेन शिल्पिना कारयित्वा स्थापयेदिति शास्त्रवचनम्।

ज्येष्ठाभिषेकस्य प्रथमदिने श्रीस्वामिने माध्याह्न आराधनायाः परिसमाप्त्यनन्तरं श्रीमलयप्पस्वामिनम् उभयदेवीभ्यां सहितं विमानस्य प्राकारप्रदक्षिणतया, सम्पङ्गि-प्राकारे यागशालायाम् 'अष्टोत्तरशतकलश-स्नपन तिरुमञ्जनम्' इति वैदिकीं प्रक्रियां १०८ कलशैः निर्वहन्ति। ततः कल्याणमण्डपस्थ यागशालायां समानयन्ति। वैखानस भगवच्छास्त्रविधितया देवताप्रार्थनां, विष्वक्सेनाराधनां, स्वस्ति-पुण्याहवाचनम्, अङ्कुरार्पणं, रक्षाबन्धनम्, अग्निप्रणयनादि प्रक्रियान् शास्त्रोक्तदिशा, वेदपुरस्सरेण निर्वहन्ति। तदनन्तरम् उत्सवार्थं सर्वकार (ति.ति.दे) पक्षतः कार्यनिर्वहणाधिकारि-दम्पत्योः सङ्कल्पं प्रोक्तम्। यागशालायां १०८ कलशान्, ९ कलशान् च व्यूहेन ४ पङ्क्षिषु स्थापयन्ति। एवं रीत्या तिस्रः पङ्क्तयः भवन्ति। मध्यस्थे प्रधानकलशे वरुणदेवताम् आवाह्य, उपचारसमर्पणं कुर्वन्ति। प्रधानहोम - प्रायश्चित्तहोम-अन्तहोमान्, पूर्णाहुतिं च निर्वह्य, अग्न्युपस्थानेन होमकैङ्कर्य समाप्तिं कुर्वन्ति। ततः श्रीस्वामिनः उत्सवमूर्तिभ्यः १२ प्रकारद्रव्यैः तथा च दुग्ध-दधि-मधु-हरिद्रादि द्रव्यैश्च विशेषस्नपनतिरुमञ्जनं भवति। सायंकाले श्रीदेवी भूदेवी समेताय श्रीमलयप्पस्वामिनम् अतिमूल्य-मनोहर-वज्रकवचेन अलङ्कृत्य, चतुर्षु पुरवीथिषु उत्सवं निर्वहन्ति। एवमेव शेषदिनद्वयं प्रातःकाले अष्टोत्तरकलशस्नपनं तथा च द्वितीयदिनस्य सायंकाले मौक्तिककवचम्, तृतीयदिनस्य सायंकाले स्वर्णकवचेन तिरुवीथ्युत्सवः भवति। तृतीयदिनस्य प्रातःकाले स्नपनानन्तरं कवचप्रतिष्ठा भवति।

**मूर्तीनां रूपेभ्यः सुष्ठु धारणयोग्यरीत्या कवचान् सर्वप्रयत्नैः सम्भरणं कृत्वा बिम्बानां रक्षणं कर्तव्यमिति अयमेव ज्येष्ठाभिषेकस्य परमार्थः इति भृगुः प्रकीर्णाधिकारे प्रोक्तवान्।**

तृतीयदिनस्य प्रातःकाले अष्टोत्तरकलशस्नपने भागतया होमादि वैदिकीप्रक्रियानां परिसमाप्त्यनन्तरं, पञ्चगव्ये (गोक्षीर-गोदधि-गोघृत-गोमूत्र-गोमय) अधिदेवतान् आवाह्य, उपचारं समर्प्य, अनन्तरं कवचार्थं वास्तुहोमं कुर्वन्ति। पञ्चगव्यैः कवचप्रोक्षणं कृत्वा, वास्तुशुद्धिं कारयित्वा, स्वर्णकवचान् श्रीस्वामिनः उत्सवमूर्तिभ्यः समर्पणाय योग्यान् कुर्वन्ति (पवित्रीकुर्वन्ति)। पञ्चदशसूक्तैः अभिमर्शनक्रियां कवचेभ्यः निर्वह्य, ततः 'विष्णोर्नुकम्' इति मन्त्रेण स्वर्णकवचं, श्रीदेवीभूदेवी समेत मलयप्पस्वामिने दृढतया, स्थिरतया च समर्पयन्ति।

आवर्षं स्वामिनः उत्सवमूर्तयः स्वर्णकवचैः शोभायमानाः भवन्ति। किन्तु ज्येष्ठाभिषेकोत्सवसन्दर्भे तावत् स्वामिनः निजार्चारूपदर्शनं भक्तेभ्यः भवति। एवमेव साधारणतया अभिषेकद्रव्यैः दुग्ध-दधिप्रभृतिभिः स्वामिनः पादौ एव अभिषिञ्चन्ति। उत्सवमूर्तयः स्वर्णकवचैः भवन्तीति कारणात् एवं क्रियते। किन्तु ज्येष्ठाभिषेकसमये एव श्रीमलयप्पस्वामिने शिरसादिपादपर्यन्तं सर्वैः द्रव्यैः अभिषेकं कारयन्ति।

मूर्तीनां रूपेभ्यः सुष्ठु धारणयोग्यरीत्या कवचान् सर्वप्रयत्नैः सम्भरणं कृत्वा बिम्बानां रक्षणं कर्तव्यमिति अयमेव ज्येष्ठाभिषेकस्य परमार्थः इति भृगुः प्रकीर्णाधिकारे प्रोक्तवान्। एवमेव तृतीयदिने स्वर्णकवचसमर्पणात् पूर्वं श्रीस्वामिनः मूर्तिभ्यः सुगन्धतैलं समर्प्य, शरीरोपरि चन्दनस्य, तस्योपरि श्वेतवस्त्रं धारयित्वा, कवचधारणं कुर्वन्ति। एवं रीत्या तिरुमलायां वैभवेन दिनत्रयं यावत् ज्येष्ठाभिषेकमहोत्सवः निर्वहन्ति।

अस्मिन् उत्सवे भागग्रहीतेभ्यः सर्वेभ्यः भक्तेभ्यः श्रीवेङ्कटेश्वरस्वामिनः दिव्याशीः प्राप्यन्ते। वयमपि अस्मिन्नुत्सवे भागं गृहीत्वा श्रीस्वामिनः कृपापात्राः भवेम।



# बालविनोदिनी ③



## देवभक्तः

एकः परमः देवभक्तः अस्ति। सः प्रतिदिने भक्त्या देवस्य प्रार्थनां करोति। "देव, कृपया मह्यम् आरोग्यं ददातु, धनं ददातु" इति। सः किञ्चित् अपि प्रयत्नं न करोति, कार्यं न करोति। देवः साहाय्यं करिष्यति इति तस्य विश्वासः।

एकस्मिन् दिने सः वृषभशकटे गच्छति स्म। मृण्मार्गः आसीत्। तदा वृष्टेः आरम्भः अभवत्। घटिकात्रयं वृष्टिः निरन्तरम् आगतवती। तदा तस्य शकटस्य चक्रं मार्गे अन्तः गतम्। सः उपविश्य "देव, कृपया साहाय्यं करोतु, अहं परमभक्तः अस्मि। कृपया साहाय्यं करोतु" इति प्रार्थनां कृतवान्।

तदा मार्गे एकः सज्जनः आगतवान्। भक्तं दृष्ट्वा पृष्टवान् "भो मित्र, किञ्चित् साहाय्यम् आवश्यकम् वा?" इति। तदा भक्तः उक्तवान् "भवतः साहाय्यं न आवश्यकम्। देवः अस्ति। सः एव साहाय्यं करोति" इति। तदा सज्जनः गतवान्।

किञ्चित् समयानन्तरम्, अन्यः एकः आगतवान्। सः अपि तदैव पृष्टवान् " भो मित्र, किञ्चित् साहाय्यम् आवश्यकम् वा?" इति। तदा भक्तः उक्तवान् " भवतः साहाय्यं न आवश्यकम्। देवः अस्ति। सः एव साहाय्यं करोति" इति। सः अपि गतवान्।

इदानीं वृष्टिः अधिका अभवत्। जलं तस्य कण्ठपर्यन्तम् आगतम्। तदा पुनः एकः आगतवान्, पृष्टवान् च" भो मित्र, किञ्चित् साहाय्यम् आवश्यकम् वा?" इति। तदा भक्तः पुनः उक्तवान् "भवतः साहाय्यं न आवश्यकम्। देवः अस्ति। सः एव साहाय्यं करोति" इति। सः अपि गतवान्।

वृष्टिः अधिका अभवत्। सः जले मृतवान्। तदा सः स्वर्गं गतवान्। सः देवं पृष्टवान् - "देव, अहं भवतः परमभक्तः। यदा मम कष्टः अभवत्, भवान् किञ्चिदपि साहाय्यं न कृतवान्। भवान् द्रष्टुमपि न आगतवान्। किमर्थम्?"

तदा देवः उक्तवान् "भो भक्त, अहं त्रिवारम् आगतवान्। पृष्टवान् च। 'साहाय्यम् आवश्यकम् वा?" इति। परन्तु भवान् प्रयत्नम् एव न करोति चेत्, अहं कथं साहाय्यं करोमि?"

तदा भक्तस्य ज्ञानोदयः अभवत्। यदि वयं प्रयत्नं कुर्मः, तर्हि एव देवः साहाय्यं करोति।

**उद्यमः साहसं धैर्यम् बुद्धिः शक्तिः पराक्रमः।**
**षडेते यत्र वर्तन्ते तत्र देवः सहाय्यकृत्।।**





आपतः अधिकः अस्ति। तथापि
वेङ्कटेशदर्शनेन या शीतलता मनसि उदेति,
तस्याः समक्षे आतपः कुत्र.....

गोविन्द! गोविन्द!




तेलुगु मूलम् - डा. चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - श्री अमरनाथशर्मा

# औषधगुणानां समाहारः
# हिङ्गुः



आहारपदार्थानां निर्माणे रुच्यर्थम् उपयुक्तः पदार्थः हिङ्गुः। अयम् एकस्मात् वृक्षात् लभ्यमानः निर्यासः। संस्कृते अस्य नैकानि नामानि सन्ति। नानाविधव्याधीन् न्यूनीकरोतीति कारणात् सहस्रवेधी इति, अग्निदीपनार्थं प्रयुज्यतेति कारणात् दीप्तिः इति, क्रिमिसंहारकः इति कारणात् भूतरि इति एवम् अस्य बहूनि नामानि सन्ति।

एपियेसि इत्युच्यमानस्य वृक्षकुटुम्बस्य सम्बन्धितस्य अस्य हिङ्ग्वोः शास्त्रीयं नाम फेरुल फोटिडा' इति। हिङ्गुम् आङ्ग्ले' 'असफोटिडा' इति वदन्ति।

हिङ्गुम् औषधरूपेण कथं प्रयुज्मः इति ज्ञास्यामः।

**श्वासरोगे** - २५ ग्रा. हिङ्गुचूर्णं, २५ ग्रा. पाककर्पूरचूर्णञ्च मेलयित्वा किञ्चित् जलं संयोज्य, पेषयित्वा अडकीबीजसदृशान् गोलकान् निर्माय, शोषयित्वा प्रतिदिनं द्विवारं, त्रिवारं वा सेवनेन श्वासरोगः (अस्थमा) नियन्त्रणे आयाति। एनानेव गोलकान् चूर्णीकृत्वा दन्तानां पीडास्थाने स्थापने सति दन्तपीडाः च नश्यन्ति।

**सन्धिपीडासु** - २०० मि.ली. तिलतैले २० ग्रा. हिङ्गुचूर्णं, २० ग्रा. अवहतं लशुनं, २० ग्रा. सैन्धवलवणचूर्णं मिश्रीकृत्वा, शोषयित्वा निष्कास्य, शोधयित्वा प्रतिदिनं १ अथवा २ वारं, एकैकस्मिन् समये ५ मि.ली. औषधं १०० मि.ली जले सम्मेल्य सेवयेत्।

एनमेव तैलं किञ्चिदुष्णं कृत्वा उपर्यावर्तनरूपेण अपि उपयोक्तुं शक्नुमः।

**वृश्चिकदंशने** - १/४ चमसप्रमाणं हिङ्गुचूर्णं, किञ्चिज्जलं, पलाण्डुं च सम्मेल्य, पेषयित्वा वृश्चिकदंशनस्थाने लेपनेन बाधा नश्यति।

**ग्यास्ट्रिक् ट्रबुल्** - हिङ्गुचूर्णं, शुष्कजीरकचूर्णं, शुण्ठीचूर्णं, शुष्कसर्षपचूर्णं, सैन्धवलवणचूर्णञ्च एकैकं १० ग्रा. प्रमाणेन सम्मेल्य, स्थाप्य प्रातः, सायं १ ग्रा. औषधं १०० मि.ली. तक्रे सम्मेल्य सेवनेन उदरपीडाः, उदरे वायुदोषाः, विरेचनाश्च नश्यन्ति।

**नानाविधानां विरेचनानां कृते** - हिङ्गुं, हरितकर्पूरं, हरडचूर्णं, शुष्कजीरकचीर्णं समानप्रमाणेन सम्मेल्य, स्थाप्य प्रतिदिनं ३ अथवा ४ वारं, एकैकवारं ५०० मि.ली ग्रा, एकग्रा. मधुना सह सेवनेन नानाविधाः विरेचनाः न्यूनीभवन्ति।

अन्तर्गतरक्तस्रावेषु, गर्भधारणेत्यादि समस्यासु हिङ्गुं न उपयोक्तव्यम्।

हिङ्गुम् औषधरूपेण स्वीकरणसमये शुद्धं हिङ्गुं परिशील्य सेवनेन शुभफलिताः दृश्यन्ते।

शुद्धहिङ्गुचूर्णं जले क्षेपणेन पूर्णतया आर्द्रीभूत्वा दुग्धवत् भवति। अग्निशलाकया ज्वालयामश्चेत् पूर्णतया ज्वलति।

रजः प्रवर्तिनीवटी, हिङ्ग्याष्टकचूर्ण - कर्पूरवटी त्रिगुणतैलादि प्रसिद्ध ओषधीनां निर्माणे, एवमेव मेघनाथगुलिका - अगतियार् कुजुम्बु आदि तमिलक्षेत्रे प्रसिद्धिप्राप्तेषु सिद्ध-ओषधीनां निर्माणे च हिङ्गुम् उपयुज्यन्ति।





Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

# तिरुमलतिरुपतिदेवस्थानम्

## अप्पलायगुण्ट

# श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

### १३-०६-२०१९ तः २१-०६-२०१९ पर्यन्तम्

१३-०६-२०१९ गुरुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

१४-०६-२०१९ शुक्रवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

१५-०६-२०१९ शनिवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

१६-०६-२०१९ भानुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

१७-०६-२०१९ सोमवासरः
प्रातः - आन्दोलिकासेवा
रात्रौ - गरुडवाहनम्

१८-०६-२०१९ मङ्गलवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

१९-०६-२०१९ बुधवासरः
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

२०-०६-२०१९ गुरुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

२१-०६-२०१९ शुक्रवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



